Tel : "Samskrutam"　　　　दूरध्वनिः - "संस्कृतम्"

वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

संपुटः १३ | 15 th JANUARY 1975 | क्रमांकः १



ति. कं. तिरुवेंगडाचार्यः

आनन्द-पुष्याङ्कः

शकाब्दाः १८९६

मूल्यम् ०-५० पैसाः

# विषयसूची







# संक्रान्तिशुभाकांक्षाः



अस्यां महोत्सववेलायां अस्मद् गैर्वाणी मासिकपत्रिकाग्राहकाणां, पठितॄणां, गद्यपद्य कथानाटिकादीनां लेखकानां चास्माकं शुभाकांक्षाः एतन्मूलतया निवेदयामः। अस्मिन्नेव आनन्दसमये एतदपि विज्ञापयामः, ये ये ग्राहकाः गैर्वाण्याः वार्षिकं मूण्यं बहुकालान्न प्रेषितवन्तः ते ते महाशयाः स्वेच्छया, वार्षिकमूल्य संप्रेष्य, पत्रिकाप्रचलनाय साह्यमाचरन्त्विति। अपि च ये वार्षिकमूल्यमप्रेषयन्तः अनिच्छन्तोपि, पत्रिकां स्वीकुर्वन्ति, तेऽपि पत्रिकाग्रहणे स्वाऽसम्मतिं निवेदयन्त्विति च प्रार्थ्यन्ते। एतादृशेषु कर्कश-दिवसेषु विना मूल्यं पत्रिकायाः प्रेषणं, प्रचालनं च सुतरां दुस्साध्यमिति विज्ञै र्विज्ञायत एव। रसज्ञाः संस्कृताभिमानिनश्च गैर्वाणीग्राहकतां स्वीकृत्य गीर्वाणवाण्याः सर्वतोमुखाभिवृद्धये प्रयत्नं कुर्वन्त्विति च बहुधाऽऽशास्यते।

# सम्पादकीयम्

## अविस्मरणीयोदयं महाभागः


ति. कं. तिरुवेंगडाचार्यः

यः खल्वस्या स्सभायाः प्रारम्भकः, परिपोषकः, रजतोत्सवकर्ता, प्रधानमन्त्री चासीत्, सः श्रीमान् **ति. कं. तिरुवेंगडाचार्यः** अतीते वत्सरे १४-१२-१९७३ तिथौ भौतिकं शरीरं विहाय स्वाचार्यपदं गतः । एकस्माद्वत्सरादारभ्य सं. भा. प्र. सभा तस्य महाभागस्य सेवा मलभमाना अत एव शोभाहीना च वर्तत इति महत् शोकस्थानम् । स आचार्यवर्य एक एव सुनिपुणं सकलमपि कार्यजातं निर्वर्तयन् आसीत्, यदिदानीं बहुभिः क्रियमाणमपि असंपूर्णमतृप्तिकरमेव वर्तते । पञ्चविधपरीक्षासरणिः, तदुचितोपयोगिपाठ्यानां निर्णयः, तत्पुस्तकानां मुद्रापणं, संस्कृतप्रचारः, स्वपरराष्ट्रेषु च परीक्षाकेन्द्राणां प्रचालनम् इत्यादिक स्सर्वतोमुखाभिवृद्धिकरः कार्यकलापः श्रीमत्तिरुवेङ्कटाचार्योपज्ञ एवेति वचने न कोऽपि सन्देहः, विवादो वा भवति । न केवलमियत्तया तृप्तिमापन्न स्स गीर्वाणवाणीचरणांगदकिंकिणीनिक्वाणानुरणितान्तःकरणः श्रीमानाचार्यः गैर्वाण्याख्यां त्रैमासिकीं संस्कृतपत्रिकां प्रथमं प्रारब्धवान्, या पुनरिदानीं शैशवमतीत्य, सुवर्णा, रम्यपदन्यासा,

रसिकजनाह्लादकारिणी, विद्वन्मनोहारिणी च प्रतिमासं पाठकजनानां, संस्कृताभिमानिनां करकमलोपलालिता राराजते । सभायाः भवननिर्माणाय तेन आचार्येण कृतः परिश्रम श्चानितरसाधारण इति सभापरिचितै र्जनै रनुसरणीयः प्रशंसनीयश्च बोभवीति । तस्याऽऽचार्यस्य प्रयत्नबलादेव भवनस्य पूर्वोभागः सुन्दरं निर्मितः । पश्चाद्भागनिर्माणायापि तत्कृतप्रयत्नाः फलोन्मुखा भवन्तीति निवेदयितु मानन्दतुन्दिलहृदया भवामः । शीघ्रमेवोदाराणां साहाय्येन सभाभवनमनूनशोभाभासमाना असमाना च भवत्विति भूयो भूयः भगवन्तं कमलानाथं वेङ्कटनाथं प्रार्थयामः ।

सभाभवननिर्मितिपरिपूर्तिमन्तरा, तस्य मनश्शान्ति र्न स्यादित्यस्माकं विश्वासः । महापुरुषै रारब्धस्य महाकार्यस्य परिपूरणेन परिपालनेन च महापुरुषाणां सहचरैरनुचरैश्च स्वेषां तेषु विद्यमाना भक्तिः प्रकटीक्रियते ननु ।

तस्य श्रीमतः ति. कं. तिरुवेङ्कटार्यस्य प्रथमाब्दिकदिनेऽस्मिन् (२-१-१९७५) मार्गशीर्षबहुलपञ्चम्यां तिथौ पुनः पुनः सांजलिबन्धं वयं तस्याऽनुचराः तदुपदिष्टसत्सरणिमनुसरन्तः सभायाः कार्यनिर्णेतारः कार्यनिर्वाहकाश्च पारस्परिकं वैमुख्यं, वैमनस्यं, वैरुध्यं च विनाप्येकीभूय सभाया स्सकलविधाभिवृद्धयै बद्धकङ्कणा भवाम इति संगरं कुर्मः ।

श्रीआचार्यस्य आत्मशक्ति रस्मासु प्रविश्य योग्ये कार्ये प्रेरयत्वित्याशास्यते । अस्माकं मार्गदर्शकस्य, आदर्शपुरुषस्य च पूज्यस्याऽऽचार्यस्य पुनः पुनरञ्जलिं घटयामः ।

॥ श्रीमतोऽऽचार्यस्याऽऽत्मशान्तिर्भूयात् ॥

प्रतिवर्षं पितृपादस्य स्मृतिचिह्नतया तत्पुत्रेण श्रीमता वेङ्कटराघवेण संस्कृतसारस्वतविषयिकां यां काञ्चन स्पर्धां विद्यार्थिनां परिकल्प्य तत्र प्रथमतयोत्तीर्णानां सुवर्णपदकं दीयत इत्युक्त्वा स्वस्योदारतां, पितृसदृशताञ्च प्रख्यापयामास ।

श्रीतिरुवेङ्कटनामा
सं. भा. प्र. सभा प्रधानमन्त्री सः ।
तावद्वत्सर आसीत्
स्वाचार्यपदं प्रपद्य कालवशात् ॥





# गान्धीकथा

बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

महात्मागान्धी महाभागः वङ्गप्रान्तेषु सञ्चरति स्म । तत्रैकस्मिन्नगरे जातु कस्यचन क्षेत्रस्वामिनः अतिथिरभून्महात्मा । आढ्यस्य तस्य गृहे अनेकाः किङ्कराः गृहकार्यार्थं नियुक्ता आसन् । अतिक्षुद्रमपि कर्म सः स्वहस्तेन न करोति स्म ।

वासर एकास्मिन् गान्धी महात्मनः प्रार्थनासभा सायंसमये तस्यातिथेयस्य हर्म्यस्य बहिर्वेदिकायां प्राचलत् । प्रार्थना परिषदि महात्मनः प्रवचनम् श्रोतुं बहवः जनाः सम्मिलिता बभूवुः । "अद्य प्रार्थनानन्तरं दैहिक श्रमगौरवमधिकृत्य कानिचन वाक्यानि कथयित्वा धनिकस्य मनसः परिवर्तनार्थं प्रयत्नः कर्तव्य" इति महात्मा निश्चयं अकरोत् ।

प्रार्थनावेलायां दीपो बाधक इति मत्वा दीपप्रशमनान्तरमेव सदा प्रार्थना प्रचलति स्म । एतन्नियममनुसृत्य महात्मा स्वपार्श्वे एवोपस्थितस्य गृहस्वामिनः विद्युज्योतिः प्रशमनार्थमवदत् । प्रशामकग्रथिः (Switch) समीप एवासीत् । तथापि आज्ञप्तः सः स्वयमगत्वा तदर्थं किंकरमेकमामन्त्रयामास" दिष्टया तदागमनात्पूर्वमेव दीपः स्वयं अशाम्यत् ।

भगवद्भजनानन्तरं प्रवचनवेलायां महात्माऽऽह । "अस्मद्देशे भारतेऽद्य केचन धनाढ्याः बहुश्रुताश्च केचन, अल्पाल्पकार्याणां समेषामपि कृते अन्येषां मुखानि अवलोकयन्तो वर्तन्ते । सेवकैर्विना तेषां कार्यमेकमपि न चलति । नैतत् सर्वथा साधु । शरीरश्रमेण ते नितरामनभिज्ञाः । आत्मनोपि कर्मकरणे बहुधा लज्जन्ते । अपि च तत्तत्कार्यनिर्वहणं प्रति नैच्य

मनुसन्दधते । सर्वथा नैतदपि युक्तम् । श्रमं विना यो भुंक्ते स स्तेन एव" इति ।

क्षेत्रपतिः महात्मनः वाक्यानि श्रुत्वा सुतरां व्रीडितोभूत् । निजापराधञ्च ज्ञातवान् । तत्प्रभृति स इत्थं प्रतिज्ञातवान् स्वमनमसि "उत्तरत्र कदापि सामान्यकार्यार्थं किङ्करसाहाय्यं नाहमपेक्ष" इति ।

तत्परीक्ष्यार्थमेव तदा तत्र काचन विचित्रा घटना समभवत् । दिष्टया प्रकम्पनो महान् प्राचलत् । तदा चतुष्पात्पीठोपरिस्थितं पुष्पभाजनं भूमावपतत् । बहुधा खण्डशोऽभूच्च । एतद्दृष्टा प्रवचन प्रभावितः सः धनिकः स्वयमेवोत्थाय गत्वा सत्वरं सर्वानपि काचशलाकन् संगृह्य दूरं चिक्षेप ।

एवं महात्मनो जीवनं सदा मार्गभ्रष्टानां सदुपदेशक आसीत् ।

## वैकुण्ठैकादश्यां सभाकार्यक्रमः

२५-१२-७४ तिथौ वैकुण्ठेकादश्यां प्रातः नवघण्टावादन समये सभाभवने विद्यार्थिनां श्रीविष्णुसहस्रनामस्तोत्रप्रवचनस्पर्धा श्रीमतः सभाकार्यदर्शिना रामनाथार्याणाम् पर्यवेक्षणे प्रचलिता । स्पर्धायां पञ्चत्रिंशत् विद्यार्थिनः प्रविष्टाः । श्रीमान् (ब) शेषाचार्यः (सं. भा. प्र. सभायाः प्रधानमन्त्री) गोपालन् (भूतपूर्वपण्डितः) पि. वि. रमणमूर्ति M. A., प्रभुत्वकलाशाला संस्कृतोपन्यासकः न्यायनिर्णेताराः व्यवाहरन् । श्री के. सत्यनारायण, श्रीनिवास नागराजरायैः प्रथमद्वितीयतृतीयबहुमतयः उपलब्धाः । सायन्तने जीवकारुण्यसभाभवने प्रचलिताया विश्वहिन्दुपरिषदः सभायां बहुमतिप्रदानमासीत् । श्रीविष्णुसहस्रनामस्तोत्रप्रवचने स्पर्धिनां सर्वेषामपि श्रीविष्णुसहस्रनामस्तोत्रग्रन्था। नित्यपारायणार्थं वितीर्णाः ।

# ग्रन्थपरिचयः

★

१. श्रीपारिजातापहरणकाव्यम् — [मूल्यम् रू. १-५०

श्रीनन्दितिम्मकविविरचितं आन्ध्रपारिजाताहरणकाव्यं संस्कृतभाषायां अनेन कविना स्वेच्छानुवादरूपेण अनूदितम् ।

कर्ता – श्री न. च. वेङ्कटताताचार्यः ।



२. सूरसौरभमु (आन्ध्रग्रन्थः) [मूल्यम् रू. १-५०

सूरदास हिन्दीभाषायां विरचितस्य सूरसागरस्य आन्ध्रानुवादः ।

कर्ता – श्री मैलवरपु सूर्यनारायणमूर्तिः, कृष्णपालेमु ।
प्रकाशकाः –श्री गोदाग्रन्थमाला, मुसुनूरु,
नूजिवीडुतालूका, कृष्णमण्डलम् ।



३. साहितीस्वयंवरमु (पदचित्रविन्यासमु) —

रचयिता – विद्वान् श्री ताटिकोण्ड वेङ्कटकृष्णय्य, तिरुपति । दमपि श्री गोदाग्रन्थमालया प्रकाशिता ।

# संस्कृतस्य राष्ट्रभाषात्वम्

ए. वेंकटश्वररावः, एम्. ए., शिरोमणिः,
उपन्यासकः, श्री वेंकटेश्वरप्राच्यकाशाला, तिरुपति ।

प्रथमः – गीर्वाणवाणी राष्ट्रभाषापदे स्थातुं नार्हतीति मन्ये ।

द्वितीयः – संस्कृतस्य राष्ट्रभाषात्वं सिद्धचतीत्येव ममाभिप्रायः ।

प्र – तच्च कथं सिध्यतीति निरूप्यताम् ।

द्वि – तस्याः भाषायाः सामर्थ्यं तादृशमिति ममाशयः । राष्ट्रभाषापदे सा भाषा स्थातुं नार्हतीति भवान् कथं निरूपयितुकामः ?

प्र – तत्र ममाविश्वास एव हेतुः ।

द्वि – मम तावत् विश्वास एव वर्तते ।

प्र – केवलविश्वासेनैव कार्यसिद्धिर्भवति वा ?

द्वि – केवलविश्वासेनैव यदि न भवति, तर्हि अविश्वासेनापि न भवतीति च न । अपि च मम विश्वासं शास्त्रमपि समर्थयति "यादृशी भावना यस्य सिद्धिर्भवति तादृशी" इति ।

प्र – अविश्वासस्याप्येतच्छास्त्रवाक्यं प्रमाणमेव किल ! भवतु भवद्विश्वासः सहेतुको वा निर्हेतुको वा ?

द्वि – भवदीयाविश्वासस्य सहेतुकत्वं प्रथमतो निरूप्यताम्; तदनु मम पक्षमहं स्थापयिष्यामि ।

प्र – यतः एकस्मिन्नपि प्रान्ते संस्कृतमधुना न व्यवह्रियते । ग्रन्थगतमेव तत् । तत एव जनास्तां भाषां मृतेत्यपि वदन्ति । व्यवहारादपेता सा भाषा राष्ट्रभाषा भविष्य-

तीति कथं प्रत्येतुं शक्यम्? कदाचित् संस्कृतं भारतदेशे व्यवहारभाषा बभूवेत्ययं विषयः अत्यन्तं पुरातनः।

**द्वि** – पुरातनकाले तु स्थितोऽपि तद्व्यवहारः संकुचित आसीत्। सा भाषा कलुषिता माभूदिति कृत्वा सामान्यप्रजानां व्यवहारात् पठन-पाठनाच्च दूरीकृता। अधुना तु यः कोऽपि तां भाषां पठति भाषते च। किञ्च संस्कृते गैर्वाणी, सुधर्मा इत्यादयः मासिकदैनिकपत्रिकाश्चाधुनाऽनेकाः प्रकटीक्रियन्ते, बहुभिराद्रियन्ते च। संस्कृतज्ञाः तस्यामेव भाषायां सभाः निर्वहन्ति। काशी, दर्भंगा संस्कृतविश्वविद्यालययोः केन्द्रीयसंस्कृतविद्यापीठेषु (तिरुपति, पूरी, जम्मू, अलहाबाद्) चाधुनिकं शास्त्रीयविज्ञानमपि संस्कृतमाध्यमिकेनैव बोध्यते। संस्कृतविश्वपरिषत्, संस्कृतभाषाप्रचारिणी सभा (चित्तूरु) प्रभृतयः संस्थाः संस्कृतप्रचारैकबद्धदीक्षाः समुल्लसन्ति।

**प्र** – प्राचीनकाले विद्यावन्तो जना एव विरलाः। अधुना बहवो विद्यावन्तः सन्ति। तेषु संस्कृतज्ञानां संख्या स्वल्पतरैव। एवमन्यभाषापत्रिकापेक्षया संस्कृतपत्रिकाः न्यूनसंख्याका एव। जीवनोपाधिरेव विद्यायाः परमं प्रयोजनम्। स च संस्कृताध्येतॄणां सुलभो न भवति। तत एव प्रजानां संस्कृतेऽभिरुचिः न उपगता। तस्मात् संस्कृतस्य राष्ट्रभाषात्वसिद्धिः गगनकुसुमायत इति तर्कयामि। पुरा सा भाषा व्यवहारे आसीदित्यत्र न संशयः। स्वातंत्र्यसमुपार्जनानन्तरं हिन्दी राष्ट्रभाषा भवत्विति निरणायि। बहुभिर्जनैः व्यवह्रियमाणाऽपि, सा भाषा नैतावत्पर्यन्तं समग्रतया राष्ट्रभाषापदं प्रापिता।

एवं स्थिते एकाऽप्रचलिता प्राक्तनभाषा राष्ट्रभाषा भविष्यतीत्ययमभिप्रायः नैव समुचितः ।

द्वि – आधुनिककाले विद्यावत्सु जनेषु संस्कृतज्ञा विरला इत्यत्र न सन्देहः । किन्तु अधुना प्रचारे विद्यमानासु भारतीय-भाषासु अन्तिर्वाहिनीरूपेण गीर्वाणवाण्याः प्रसारः अप्रतिहत एव प्रवर्तते । न केवलमुत्तरभारतीयभाषासु किंतु द्राविड-भाषानाम्ना प्रसिद्धासु दक्षिणदेशभाषास्वपि संस्कृतस्य प्रभावः सुप्रसिद्ध एव । तत एवोक्तं "तल्लि संस्कृतंबे एल्लभाषलकुनु" (सर्वासामपि भाषाणां संस्कृतमेव माता) इति । तथा च यद्यपि संस्कृतज्ञाः पण्डिताः अल्पसंख्याका एव तथापि स्वस्वमातृभाषासु संस्कृतेन प्रभावितासु बद्धादराः जना स्सर्वेऽपि संस्कृतभाषास्वरूपं जानन्त्येव । किं च यदि कश्चन संस्कृतज्ञः सरलसंस्कृते भाषते तदा असंस्कृतज्ञोऽपि कश्चन भारतीयः तदर्थमवगन्तुं प्रभवति ।

अधुना निरुद्योगिनां संख्या दिनदिनाभिवृद्धिं गच्छति । आङ्गलभाषापट्टभद्रा अपि अधुना सहस्रशः निरुद्योगिनः दृश्यन्ते । तथात्वे संक्रुतज्ञानामेव जीवनोपाधिर्नास्तीति यदुक्तं तत्कथं समुचितं भवति ? किंच जीवनोपाधिपरिकल्पन-मुद्योगप्राप्त्या संबद्धम् । उद्योगाश्च तत्तद्भाषाप्राभव मनुसृत्य लभ्यन्ते । भाषायाः प्राभवं च राज्याज्ञाधीनम् । यदि प्रभुत्वनियमाः आङ्लभाषाध्येतॄणामनुकूला भवन्ति तदा तेषामुद्योगप्राप्तिर्भवति । यदि राज्याज्ञेन संस्कृतस्य जातीयभाषात्व मनुमन्यते, सर्वकारश्च संस्कृतज्ञानामुद्योग-परिकल्पनाय स्वनियमान् परिवर्तयति तर्हि संस्कृतज्ञानामपि

समुचितोद्योगप्राप्तिर्भवत्येव। तथा च जीवनोपाधेर्भावाऽभावौ न भाषाधीनौ। सर्वकारनियमाश्च प्रजाभिप्रायानुसारेण सर्वदा परिवर्तयितुं शक्यन्ते। तस्मात् संस्कृतज्ञानां जीवनोपाधिर्नास्तीति विचारः न कर्तव्यः। परंतु संस्कृतस्य विषये अनुकूलत्वेन प्रजाभिप्रायस्य परिवर्तनमेव कर्तव्यम्।

अपि च संस्कृते प्रजानामभिरुचिर्नास्तीति यदुक्तं तदपि सत्यदूरमेव। यद्यपि पठनपाठनादीनामवकाशाभावात् गतकाले प्रजानां तत्र प्रवृत्तिर्नासीत् तथापि संस्कृतस्य माहात्म्यं निरुपममिति सर्वे जनाः जानन्त्येव। यत्रकुत्रचित् संस्कृतपण्डिताः संस्कृतबोधने प्रवृत्ताश्चेद्भवन्ति तदा तदध्ययनार्थं जनाः अहमहमिकया समागच्छन्ति। आकाशवाण्यां नूतनतया प्रवर्तितः संस्कृतवार्ताप्रसारः संस्कृते प्रजानामभिरुचिरस्तीति निरूपयामास। असंस्कृतज्ञा अपि जनाः संस्कृतवार्ताश्रवणेन संतुष्टाः तत्र स्वीयं प्रमोदं प्रकटयामासुः। तत एवेतोधिकसंस्कृतकार्यक्रमप्रसारणार्थं सर्वकारः प्रयतत इति श्रुणुमः।

स्वातन्त्र्यप्राप्त्यनन्तरं जातीयभाषास्थानं पूर्वोक्तकारणानि पुरस्कृत्य संस्कृतस्यैव प्रदेयमासीत्। राज्याङ्गनिर्मातृष्वपि बहवः तस्मिन् विषये स्वाभिमुख्यं प्रकटयामासुः। दुरदृष्टवशात् तत्स्थानं संस्कृतेन न लब्धम्। तत एव भाषासमस्यापि क्लिष्टा परिष्कारदूरा च बभूव। दक्षिणदेशे हिन्दीविषये यादृशं वैमुख्यं दृश्यते तादृशं संस्कृतविषये नास्ति। यथा अभारतीया आंग्लभाषा सर्वेषां

भारतीयानां समानरूपा तथा सर्वभारतीयसंबंधिनी संस्कृतभाषाऽपि समानरूपैव। हिन्दीभाषा न तथा। कतिपयजनानां मातृभाषा सा कथं सर्वसमाना भवति? कुत इति चेत्। खडीबोली, मैथिली, राजस्थानी, व्रज, उर्दू इत्यादिप्रान्तीयव्यवहारभाषाणां मिश्ररूपिणी एव सा। बाक्स्, मास्टर्, रेडियो इत्याद्यांग्लपदैः; जवाब, अर्जी इत्यादि सेमटिकपदैः; सुन्दर्, चित्र, समय, विनम्रता, आज्ञा इत्यादि संस्कृतपदैः, लालिटेन, इस्कूल, गायिड् इत्यादि आंग्लभाषाविकृतरूपैश्चाभिवृद्धा हिन्दीभाषा। तस्मात् भाषावैषम्यं परिहर्तुं सर्वसमानत्वं स्थापयितुं च संस्कृतं विना नाऽन्या भारतीयभाषा प्रभवति। किंच व्याकरणकृतेन संस्कारेण समग्रसुन्दरसाहित्येन शाखोपशाखारूपविविधशास्त्रीयविषयसंकलनेन च सम्पन्ना प्राचीना संस्कृतभाषा क्व? विविधभाषासंपर्कप्रभावा संस्कारहीना नवीना पुष्टिरहिता च हिन्दीभाषा क्व? तादृशसंस्कृते स्थिते ईदृश हिन्द्याः एतादृक् स्थानपरिकल्पनमविचारितरमणीयं सर्वदा अनुपपन्नं च।

प्र – भवतु हिन्दीभाषापेक्षया संस्कृतस्य समग्रत्वं सुन्दरत्वं चाङ्गीक्रियते। तथापि अन्तर्जातीयभाषात्वेन प्रथिता आंग्लभाषा बहूनां भारतीयानां परिचिता वर्तते। अत्यन्तमभिवृद्धायां तस्यामांग्लभाषाया माधुनिकजीवनोपयोगिनः सर्वेऽपि विषयाः समुपलभ्यन्ते, ये संस्कृते दुर्लभाः। तथा चाधुनिकजगत्यां सकलविधामभिवृद्धि मधिगन्तुं साधनरूपा आंग्लभाषा अपरिहरणीया भवति। एवं च तस्यां भाषायां स्थितायां पुनरतिप्राचीनस्यास्य संस्कृतस्य पुनरुद्धरणार्थं क्रियमाणौ व्ययप्रयासौ ननु निष्फलावेव।

[ अनुवर्तते ]

# अभिनववासवदत्ता

कर्ता – की. शे. वट्टिपल्लि नरकण्ठीरवशास्त्री

[ पूर्वानुबन्धः ]

सुरसुन्दरीजनेनेवेन्द्राणीसेवनाकुतूहलिना ।
वेश्याजनेन रुचिरं पल्लवरुचिना पिकव्रजेनेव ।। ।। ८४ ।।

सौधै रधिकोत्सेधैर्योधै स्सङ्ग्रामकलितरिपुबाधैः ।
कान्तं दानसनाथैर्यूथैः करिणा मनन्यकृतरोधैः ।। ।। ८५ ।।

तत्राऽस्ति नृपतितिलको नाम्ना शृङ्गारशेखर श्श्रीमान् ।
सुरतश्रमसुप्तवधूमणिताटङ्काङ्कितोरुभुजदण्डः ।। ।। ८६ ।।

यश्चारिवीरलक्ष्मीकबरीसुमदामगन्धिकरकमलः ।
धनुषो जीवाकृष्टिं कुर्वञ्छत्रुं गतासु मरचयत् ।। ।। ८७ ।।

यस्मि ञ्छासति पृथिवीं मलिनाम्बरता निशासु न जनेषु ।
अधरेषु द्विजघातो रशनाबन्धो विदग्धसुरतेषु ।। ।। ८८ ।।

तस्य गुणरत्नराशि स्सुकुमारा शैलराजतनुजेव ।
अभव दनङ्गवतीति प्रथिता कुलशीलसम्पदा तन्वी ।। ८९ ।।

अनयो रासी त्तनया वासवदत्ता सुरूपमदमत्ता ।
मनसिजविजयपताका भुवनत्रयलोभनीयलावण्या ।। ९० ।।

अथ तस्याः प्रादुरभू त्तारुण्यं जृम्भमाणलावण्यम् ।
परिणयविमुखी तस्थौ परिणाम मुपागतेऽपि तारुण्ये ।। ९१ ।।

अथ जातुचि द्वसन्तो नवकुसुमामोदमूर्छितदिगन्तः ।
विरहितरुणीकृतान्तः प्रादुरभू देधमानरतिकान्तः ।। ९२ ।।

मधुभरितकामिनीमुखगण्डूषासेकविकचवकुलौघः ।
मञ्जुलमञ्जीराङ्कितयुवतिपदाघातदळितकङ्केळिः ॥ ९३ ॥

मदनमदोद्धततरुणीपरिरम्भोद्भूतकुरुवकप्रसवः ।
कलकोकिलकोलाहलकलितप्रणयप्रकोपसम्भेदः ॥ ॥ ९४ ॥

दळदरविन्दच्योतन्मकरन्दास्वादतुन्दिलमिळिन्दः ।
पिकचञ्चुदळितपाटलमधुधारासारशीकरप्रकरः ॥ ९५ ॥

वृन्तविनिर्गतविचिकिलविवरे कूजन्मधुव्रतो रेजे ।
कुर्वन्निव कुसुमेषो र्भुवनत्रयविजयशङ्खरवम् ॥ ९६ ॥

नवयावकपङ्काङ्किततरुणीचरणप्रहाररागशात् ।
नवकिसलयापदेशा द्राग मशोक स्तमेव वहति स्म ॥ ९७ ॥

पृथुलस्तबकविनम्रा कोमलपल्लवसमुन्मिषद्रागा ।
सुललितपुष्पोद्भेदा सहकार मुपेत्य मल्लिका शुशुभे ॥९८॥

स्मरकेलिलोललाटीलुलितालककुसुमगन्धमेदुरितः ।
कर्णाटकामिनीकुचकस्तूरीपङ्कपरिमळोद्वाही ॥ ॥ ९९ ॥

चोळीकपोलपालीपत्राळीधूळिधूसरितगात्रः ।
रतिखिन्नान्ध्रपुरन्ध्रीनीरन्ध्रस्तननिदाघजलहारी ॥ १०० ॥

रतिचतुरमाळवीजनपरिणाहिनितम्बबिम्बसंवाही ।
पाटीराचलशिखरा दाटीकत मारुत श्शनकैः ॥ ॥ १०१ ॥

मथनाय विरहिणा मथ मदन स्सज्जीचकार कोदण्डम् ॥
उदियाय राजदुहितुः हृदये कान्तोपभोगचिन्ताऽपि ॥१०२॥

शृङ्गारशेखरोऽथ श्रुत्वा तनयास्वयंवरोत्सुकताम् ।
निखिलमहीतलवसतीः नृपती नेकत्र मेळयाञ्चक्रे ॥ १०३ ॥

अथ दह्यमाननूतनकृष्णागरुधूपपरिमळाकृष्टैः ।
मधुपकुलै र्बहुळीकृतघुमघुमरवमुखरिताशान्तम् ॥ १०४ ॥

अतिरभसहारलहरीपरिमळपरिमिळितगगनभूवलयम् ।
परिहासकथाव्याहृतिविदग्धश्रृङ्गारमयजनाकलितम् ॥ १०५ ॥
नानादेशनृपालैः कृतोपवेशं स्वयंवरोद्देशम् ।
आनिन्यु र्नृपतनयां पौरपुरन्ध्रयो निदेशतो राज्ञः ॥ १०६ ॥
समलञ्चकार काञ्चनमञ्चं कञ्चि त्प्रपञ्चविस्मयदम् ।
घनवन्दिघोषमुखरितदिगन्तरं विजयसमरमिव तन्वी ॥ १०७ ॥
न्यपत त्तदा तदङ्गे नृपतनयानां क्षणा द्दृशां विततिः ।
विकचारविन्दगर्भे मधुकरमालेव सौरभाकृष्टा ॥ ॥ १०८ ॥
दृष्ट्वा तानथ मञ्चाविष्टा नेकैकश श्शशाङ्कमुखी ।
रक्ता नासीदेत द्युक्तं सैषा यत स्स्वयं श्यामा ॥ ॥ १०९ ॥
कर्णीरथावतीर्णा कर्णान्तविशाललोलनयनान्ता ।
पूर्णेन्दुबिम्बवदना तूर्णं निज माससाद सा सदनम् ॥ ११० ॥
तस्या मेव रजन्यां क्षितिपतिकन्या व्यलोकय त्स्वप्ने ।
अङ्गज मिवाऽङ्गभाजं कञ्चि त्तरुणं समुल्लसद्रूपम् ॥ १११ ॥
कबरिकया मालिन्या नासिकया तुङ्गभद्रया कीर्त्या ।
स्वर्वाहिन्या वाचा नर्मदया पुण्यसिन्धुरूपमिव ॥ ॥ ११२ ॥
मूलं श्रृङ्गारतरो रेकायतनं सरस्वतीलक्ष्म्योः ।
क्रीडासदनं कान्ते र्लावण्यधनस्य कोशगृहम् ॥ ॥ ११३ ॥
वैदग्ध्यस्याऽऽयतनं रोहणशैलं गुणोरुरत्नानाम् ।
प्रभवमहीध्रं सुन्दरकन्दर्पकथामहासरिताम् ॥ ॥ ११४ ॥
सौन्दर्यस्याऽऽदर्शं निरुपमसौशील्यसम्पदां सदनम् ।
विद्यालतावळीना मावालं कौतुकालयं कीर्तेः ॥ ॥ ११५ ॥
स्वप्नगतैव मृगाक्षी विस्मयमाना विलोक्य तद्रूपम् ।
तं चिन्तामणिनृपते स्तनयं कन्दर्पकेतु मश्रौषीत् ॥ ११६ ॥

अथ सा व्यपगतनिद्रा तद्राजसुतावलोकदुर्ललिता
शय्यातले शयाना चेत स्येवं चकार भृशदूना ।। ११७ ।।

मदनोनु स चाऽनङ्गो नासत्यः किं न चाऽद्वितीय स्सः ।
अथवाऽन्यजन्मनि कृतं सुकृतं मे मूर्त मुपनत मन्ये ।।११८।।

शङ्के पङ्कजजनुषा दर्शित मेतस्य रूपनिर्माणे ।
निजकौशल्य मशेषं कथ मथ वा कान्ति रीदृ गेतस्य ।। ११९ ।।

वैदर्भी नळहेतो र्व्यर्थं वैशस मवाप विपिनेषु ।
सा भोजराजतनुजा महिषीभूताऽप्यजानुरक्तासीत् ।। १२० ।।

दुर्वाससाऽभिशप्ता दुष्यन्तकृते शकुन्तला व्यथंम् ।
ऊरुश्रीजितरम्भा रम्भा नलकूबरं चकमे ।। ।। १२१ ।।

ऋद्धि स्सा हतबुद्धि र्व्यर्थं चकमे स्वयंवरे धनदम् ।
मुग्धा पुलोमतनया वृद्धश्रवसे वृथा स्पृहा मकरोत् ।। १२२ ।।

इति मनसि चिन्तयन्ती दिशि दिशि दीनां दृशं समुज्झन्ती ।
मदनव्यथां भजन्ती साऽऽसीद्विरहाम्बुधौ निमज्जन्ती ।। १२३ ।।

शयितेव विरहमुर्मुरमध्ये स्मरदवशिखोपगूढेव ।
अविरळवसन्तकालानलकीलाजालकबळिताङ्गीव ।। १२४ ।।

मलयाचलनिलयानिलरुद्रक्रोधानलावलीढेव ।
उन्मादभूगृहान्तःपतितेवाऽजनि विनष्टकरणेव ।। १२५ ।।

लिखित मिवोत्कीर्णमिव प्रत्युप्त मिवाऽऽत्मनि प्रविष्ट मिव ।
मज्जारसशबलितमिव कीलित मिव वज्रसारघटित मिव ।।

रुधिराशये द्रुतमिव प्रचुरतर पललसंविभक्त मिव ।
कन्दर्पकेतु मात्मनि मेने कन्दर्पपीडिता तरुणी ।। १२७ ।।

[ अनुवतते ]



# नारदविजयम्

रचयिता —

**श्री कूरं तिरुवालि नरसिंहः**
व्याकरण, साहित्यशिरोमणिः,
शिक्षाशास्त्री, पि. ओ. एल्.

[ पूर्वानुबन्धः ]

समय - व्याकरणशास्त्रे यथा प्रत्याहारज्ञानं अतीव मुख्यं तद्वत् मानवेषु ईदृशगुणविभागावगमनज्ञानमपि अनिवार्यमिति ज्ञातम् मया ।

कृतघ्नः - शरीरे प्राणाः, ऋषभस्य दन्ताः, नारीणां वयः, दर्पणस्य रसम्, चक्रस्य वायुः, यथा असकृत् परीक्षितव्याः, तथा गुणाश्च परिशोधनीयाः ।

सत्य - यद्यस्ति विदितदृष्टान्तः विषयेऽस्मिन् ?

कृतघ्नः - (मन्दं हसति, आत्मानं पश्यति, भूमिं अवलोकयति, इतस्ततः परीक्षते) आद्यस्योदाहणन्तु अहमेव (व्याघ्र-चर्मधारी गौः) अपरस्य प्रतिनिधिः मत्सखा पापकृत् । (गोचर्मावृतव्याघ्रः) एतत्तु सर्वजनैः विदितपूर्वमेव ।

समय - अत्र जीवनाय किं किं कार्यम् ?

कृतघ्नः - आचरणीयधर्माः सन्ति केचन । विस्मृत्यापि सत्यं न वक्तव्यम्, युक्तम् न कर्तव्यम्, परोपकारः परित्याज्यः, आदाने आसक्तिः, दाने दरिद्रता, वचसा विश्वसौविध्यम्, कर्मणा कुक्षिपूरणम् इत्यादयः सदा सम्यगाचरणीयाः । (आकाशं दृष्ट्वा) गतोऽस्तमर्कः । अतः अहमपि गृहं व्रजामि । (गच्छति) (यवनिका पतनम्)



तृतीयोऽङ्कः समाप्तः

## अथ चतुर्थोऽङ्कः



(समयवादिगृहं, तत्र पापकृत् समायाति, सः बहुविधफलान्यानयति)

पापकृत् - भोः सत्यवादिन्, नमस्कारः (इति हस्तद्वयमपि शिरोपरि धृत्वा प्रणमति । किञ्च यथा दन्ताः दृष्टिगोचराः भवेयु स्तथा जम्बुकविनयेन हसति)

समय - स्वागतम्, स्वागतम् स्वामिनः । मम नाम सत्यवादी न ।

पापकृत् - एवमेवोक्तम् भवद्भिरिति मन्ये ।

समय - तन्नाम आसीत् पुरा नत्विदानीम् ।

पापकृत् - (विकटं हसति) हो हो ? लोकपरिवर्तनेन साकं नाम – परिवर्तनमपि जातं वा ?

समय - प्रवाहानुगुणमेव सन्तरणं कर्तव्यम्, लोकानुगुणमेव नाम – स्वीकरणमपि कार्यम् ।

पापकृत् - हम् । यथा वयं जीवामहे तथेति नुदन्तु ।

समय - इत्युक्ते ?

पापकृत् - (इतस्ततः पश्यति, उत्थाय कवाटपिधानं कृत्वा) इत्युक्ते मुख्यमन्त्रिणः अभिप्राय एव अस्माकं ध्येयः । एकेन वाक्येन वक्ष्यामि । वयं सर्वे पराभिप्रायपोषकाः इति ।

समय - अत्र अस्मद्शब्दव्यवहार्याः के ?

पापकृत् - राजकीयवेत्तारः (सगर्वं आत्मानं पश्यति)

समय - तर्हि राजकीयम् इति पदे महानर्थो विद्यत इति विश्वसिमि ।

पापकृत् - तत्पदं बहुमुख्यधातूनां आद्यक्षरसम्मेलनं 'राजृ = दीप्तौ' 'जनि = प्रादुर्भावे' 'कील = बन्धने' 'यम = उपरमे'

'माङ=माने' इत्यादि धातुभिः सङ्घटितमस्ति । अतः पदे तस्मिन् महानर्थो निलीनो वर्तत एव ।

समय - कोऽर्थः सः ? सविस्तरं ब्रुवन्तु भवन्तः कृपया ।

पापकृत् - श्रुणु, जनानां पुरतः दीप्तिः अपेक्ष्यते, स्थानलाभानन्तरं स्वार्थप्रादुर्भावः अनिवार्यः, शासनसभायां प्रतिपक्षवाञ्छा-बन्धनं कार्यम्, आत्मोपरि अविश्वासवाचके सति तस्यो-परमः यथाकथञ्चित् कार्यः, असकृत् आयशुल्काधि-कारिणां (Incometax-Officer) विषये मानं कर्तव्यमिति च बोधयति पदमेतत् । यः एवं करोति स एव उत्तम-राजकीयनायकः भवति ।

समय - महाभाष्यमेवाधीतं मया ।

पापकृत् - नैव, पश्पशाह्निकमेव केवलम् ।

समय - तर्हि इतोऽपि वर्तते वा ?

पापकृत् - (सगर्वं) राजकीयविषये भवान् कश्चन शिशुः। कालेन, वयसा, स्वानुभवेन च पठिष्यसि राजकीयपरिज्ञानम् ।

समय - भवतु ! एतानि फलानि किमर्थम् ?

पापकृत् - (विहस्य) गर्भस्त्री कदा प्रसूते ? मेघाः कदा वर्षेयुः ? टैम्बाम् कदा भग्नो भविष्यति ? राजकीयवेत्ता किं दास्यति ? कं प्रति ? कदा ? किं कारणम् ? इति न केनापि, न कदाऽपि, न कथमपि वक्तुं वा ज्ञातुं वा शक्यते शक्येत।

समय - तत् सत्यमेव स्यात् । अथाऽपि मह्यं कृपया सूचयन्तु। (तमेव पश्यति)

पापकृत् - महत्तरप्रयोजनं नास्ति किमपि ।

समय - 'प्रयोजन मनुद्दिश्य न मन्दोऽपि प्रवर्तत' इत्यार्योक्ति दृढीकुर्वन्ति खलु तेन तरप् प्रत्ययेन ।

पापकृत् - अहो! तवाऽपि अस्ति नैपुण्यम् ।

समय - 'संसर्गजा दोषगुणाः भवन्ति' ।

पापकृत् - अचिरेणैव कालेन भूयोऽपि 'प्रजाप्रतिनिधिस्वीकरणं' (General Election) भविष्यति खलु। तदा भूयोऽपि मामेव शासनसभाप्रतिनिधित्वेन (M. L. A.) अस्मान्नगरात् प्रेषयेयुः जनाः । विषयेऽस्मिन् भवतां सहायोऽपि अपेक्ष्येत कदाचित् ।

समय - तदर्थं किमर्थं धनव्ययः कृतः भवद्भि रेवम् । (फलान्युद्दिश्य वक्ति)

पापकृत् - (हसति) मित्रवर, लोकनीति रियम् । पश्य ? प्रभूतवरदक्षिणाभक्षणार्थं पिता पुत्रविद्याव्ययं करोति, शतगुणव्रीहिलाभाय कृषीवलः पृथिव्यै एकाम्शव्रीहिदानं ददाति, बृहन्मत्स्यस्य ग्रहणाय अल्पमत्स्यं अर्पयति मनुष्यः, एवं मादृशमहापुरुषैरपि महोद्देश्यप्राप्त्यर्थं एतादृशाल्पधनव्यय कार्यम् । अतः तदा मां मा विस्मरन्तु ।

समय - अवश्यम् ।

पापकृत् - प्रणामः (पापकृत् निर्गच्छति, तदा कृतघ्नः प्रविशति)

कृतघ्नः - प्रणामः ।

समय - नमस्कारः, उपविशन्तु (आसनं प्रदर्शयति, सोऽपि उपविशति)

कृतघ्नः - को वा विशेषः ? पापकृत् आगत्य गच्छति ।

श्रीः

# कुत्र सत्यं ? कुत्र नीतिः ?

रचयिता – श्री ना. व. तिरुमलान्त, प्रोद्दुटूरु.

[ पूर्वानुबन्धः ]

एतद्दृष्टवतो मम मनसि महती व्यथा जाता। अवकाशे सति सह कर्मकराणां सविधे अयमधर्मः एवं न कार्यं। इदमकृत्यं सर्वकारशिक्षार्हमिति पुनः पुनरुक्तं। ते तु मदुक्ति न बहु मेनिरे। जनान्प्रत्यपि इदं रहसि निवेदितम्। तेपि मदुक्तं सर्व मसत्य माकलयन्तः मत्स्वामिने न्यवेदयन्। कोपातुरः सन सः झटिति मामाहूय गृहान्तःस्तम्भे बध्वा, कटु विनिन्दन् स्वैरं कशया ताडयामास। द्रोहिन्! मद्दत्तं धनं स्वीकुर्वन् मत्प्रतीपमाचरसि किं? त्वं सर्वज्ञः, सत्यभाषणशीलः धार्मिकः परोपकारी किल? त्वादृशानां पतिद्रोहिणां इदमेव फलम्। इतः परं क्षणमपि न स्थातव्य मत्र। गच्छ यथेच्छमिति भीषयन् मदीयं वेतनमपि न प्रयच्छन् बन्धनान्मा ममोचयत्। प्रकृत्या भीरुरहं "लोके नास्ति सत्यस्याल्पमपि स्थानम्" सत्यं पराजयते, असत्यं जयति। धर्मो नष्टः, अधर्मोऽभिवृद्धः इति चिन्तयन् इति कर्तव्यतामूढः वीथ्यां व्यचरम्। न कुत्रापि भोजनं, वृत्तिर्वा नावापि। मदीयां दगां विशाले, विष्टपेस्मिन् कः जानाति? को वा मयि विश्वसिति? कस्य वा दयोदेति? सर्वेपि स्वकर्मसाधनतत्पराः वेगेन धावन्ति, इयं लोकनियतिः। क्षुत्पिपासार्तः इतस्तत श्चलितु मप्यशक्तः कुत्रापि वृक्षच्छायायां मूर्च्छितोऽपतम्। तत्र स्थितः मत्सदृशः कश्चन भिक्षुकः मन्मुखे शीतं जलं सिञ्चन् स्वपात्रस्थितं पुराणमन्नं मद्वदने निक्षिप्य, बालक! मा भैषीः!! अहमपि त्वादृश एव। क्षुत्पीडितोसि। अन्नमेतत् शनैः शनैः भुङ्क्ष्वेति प्रीतिपूर्वकं कथयन् अवशिष्टमन्नं

मद्धस्ते निचिक्षेप । तदा प्रभृति तेन तत्रैव मम वासोऽभूत् । धूमशकटालये, भोजनशालासमीपे स्थितः भारवहनादिकर्म कुर्वन् दुःखदुःखेन कालं यापयामास। कालचक्रभ्रमणेनाहं युवा संवृत्तः । कदाचित् नगरवीथ्यां चरन्नभूवम् । तदा अश्वशकटे प्रयान्तं कञ्चन धनिकं आकस्मिकः चोरः कश्चन झटित्यागत्य कराच्छादितया तीक्ष्णया छुरिकया छित्वा धन मादाय वेगेन पलायन चक्रे । हा ! हतोस्मि ! इत्युच्चै राक्रोशन् सोयं धनी स्रवद्रुधिरः तत्रैव मृतः। कर्णकठोरमाक्रन्दनं तदीयं निशम्य द्रुतं तत्र गत्वा तदुरसि पातितां शस्त्रीं दूरीकृत्य "कोपि घातुकः इमं अहन्" इत्युच्चै राक्रन्दम् । तत्र गच्छन्तो जनाः सकला अपि सत्वर मागत्य "चोरः कुत्र गतः ?" इति मामपृच्छन् । अनेनैव मार्गेणाधावत्, द्रुतं गत्वा तं गृह्णन्तु इति मया प्रत्युक्तम्। सङ्घमध्ये स्थितः कश्चनोन्नतः वीरश्च पुरुषः मां निर्वर्ण्य चोरः न कुत्रापि गतः, अत्रैव वर्तते,अयमेव धनाशया हत्वैनं स्वापराधमन्यस्मिन् आरोपयति, बध्नन्तु एनं, रक्षाभटालयं (Police Station) नयामः इत्युच्चै र्जगर्ज । एकाक्यहं किं कुर्यां ? नाहं चोरः, न मया हतोयम्, नाह मपराधी, इति भूयो भूयः कथयन्तं मां सर्वेपि करचरणादभिः यथेच्छं ताडयित्वा विनिन्द्य, रक्षाभटालयं प्रापय्य "अयमेनं जघान" तत्र वयं सर्वेपि साक्षिणः । युक्तो दण्डः युष्माभिर्विधेयः इत्युक्त्वा ते निरगच्छन् । अथ सर्वकारीयन्यायालये वृत्तं सर्वं विचार्य प्राड्विवाकेन यावज्जीवानुभोग्यः कठिनकारागृहवासः शिक्षारूपेण मह्यं विहितः । (वास्तविकः हन्ता सर्वकारीयगूढपुरुषेण ग्रहीतः शिक्षितश्चेति पश्चात् ज्ञातम्) अहो लोकस्य वैचित्र्यम्! अपराधी सः शिक्षा भाक्त्वहम् । लोके सत्यं वृत्तं कः जानाति ? तत् कोऽभ्युपैति ? कुत्र सत्यं ? कुतो नीतिः ? दुर्बलानां वाक् सत्यापि न

कार्यसाधिका। एवं मनसि बहु विलपन् कारायामेव अनेकान् संवत्सराननैषम्। कस्मिश्चन दिने तद्बन्धनालयाधिकारी मामाहूय दयानिधे! त्वदीयः शिक्षाकालः समाप्तोऽभूत्, त्वं मोक्तव्यः इति उन्नताधिकारिणः सकाशात् आधिकारिकपत्रमागतम्, इतः परं त्वया एवं न कार्यं, धनार्जनं हि धर्ममार्गानुसारं कर्तव्यम्, इदानीं सर्वकारेण कारुण्यात्त्वं विमुच्यसे इति आदिश्य मां कारातः मोचयामास। नूतनजगति प्रविशतो मम सर्वं शून्य मलक्ष्यत। जनाः मां वीक्ष्य हसन्त इवादृश्यन्त। काराप्रवेशाद्धेतोः न कुत्रापि वृत्तिः लब्धा। सकला अपि मां चोरः इति निनिन्दुः, लोकनिन्दां असहमानः कथं निश्चिन्तो जीवेयम्? अतः अल जीवितेन। एतल्लोकवासात्प्राणत्याग एव वरं इति मन्वानोहं रोगार्त इव उन्मत्त इव ग्रहपीडित इव मार्गे यावद्धावितुं आरभे तावदेव मत्पुरतः त्रिहायणी सौन्दर्यदेवतेवोपलक्ष्यमाणा काचन बालिका, अम्ब! सत्वरमागच्छ! भारवाहीनि शकटानि गच्छन्ति। मार्गमध्यं माधिगच्छ! इति असकृत् जनन्याकृतं सूचनमप्यनवगच्छन्ती अतिवेगतः गच्छतः कस्यचन भारवाहिनः मोदकरयानस्य अभिमुखं धावन्ती समवलोक्यत। सद्योजातत्वराप्रेरितोऽहं याननिकटं प्राप्तां बालिकां अनायासेनोद्वहन् दूरमगमम्। यानं मामुल्लङ्घ्य वेगेन गतम्। अत्रान्तरे पश्चात् आगच्छन्ती सा युवती मद्धस्तस्थितां बालां झटित्याकृष्य, तामालिङ्ग्य मुहुर्मुहुरचुम्बत्। एवं केचन क्षणाः गताः। अथ पुरतः स्थितं मां सादरं पश्यन्ती सा प्रशंसारूपाभिर्वाग्भिः कृतज्ञतामावेद्य मद्वृत्तान्तमाकर्ण्य मां स्वगृहं प्रापय्य तत्रैव मे सेवकवृत्तिं चाकल्पयत्। गृहस्वामी गुणी दयालुश्च। तस्मान्मम प्रत्यहं भोजनादिकं परिकल्प्य प्रतिमासं निर्दिष्टं वेतनमपि

व्यदात्। तदारभ्य मदीयं दु:खं क्रमेण क्षेतुमारभत। एवं कश्चन कालो व्यतीत:। वेतन-रूपेण लब्धानि रूप्यकाणि आदाय अयं जन: तदनुगृहीत: तस्मिन्नेव नगरे कञ्चन वस्त्रालयं निरमात्। तद्द्वारा इतोधि-कानि रूप्यकाणि सम्पादितानि। स एव वस्त्रालय: विपुलीकृत:। भाग्यलक्ष्म्या: कटाक्ष: मद्भाग्य-वशात् मयि पूर्णो न्यपतत्। भूत-पूर्वदारिद्रोहं संप्रति धनिक: समभवम्। द्वित्रासु व्यापार-संस्थासु अंशभागित्वेन मम प्रवेशोऽभूत्। अत एवान्येषां धन-स्वामिनां सर्वकारीयाधिकारिणां च परिचय: अहमहमिकया संजात:। पामरो दयानिधि: प्रमुखो दयानिधि: संवृत्त:। अनुभवयोग्ये वयसि अनागतं धनं अपरे वयसि समागतम्। प्रभूतधनसत्वेपि किं वा सुखं अनुभवितुं शक्यते। अत एव कारणात् मया गृहस्थाश्रमोपि न स्वीकृत:। मनसि परं एवं विधा दृढचिन्ता उदभूत्। जगति जन: क्षुधा अज्ञानेन च अधर्म-माचरति। अत: कथञ्चित् रिक्तानां, मादृशाना अनाथानां च कृते भोजनविद्याप्राप्त्युपाय: अवश्यं कल्पनीय:। धनं च अकिञ्चनेभ्य: व्ययीकार्यम् इति। अथ नगरं तत्परित्यज्य जन्म-स्थलं इदमेव प्राप्य प्रकृति-सौन्दर्यमण्डिते नद्या: तीरे प्रभूत-धनव्ययेन महद्भवनमेकं निर्माय, तत्रैव वसन् महान्त ग्राममिमं नानावसतिकल्पनेन नगरं कर्तुं यत्नान् नानाविधा नकरवम्। मदाशयाभिज्ञा: अत्रत्या: पञ्चषा धनिका: साहाय्यमर-चयन्। कालक्रमेण ग्रामोयं नगरं परिवृत्त:। नगरचिन्हानि सर्वाण्यपि अत्र ददृशिरे। स्वात-न्त्र्यदाता गान्धीमहाशयोपि नगर-मिदं अनुगृह्णाति स्म। तदानीमेव नगरनामपरिवर्तनमपि कृतम्। काले विजयपुरम् प्रधानं किञ्चन पुर मभूत्। पुरेऽभिवृद्धेपि मन्मनसि शान्ति: नोद-भवत्। शनै: शनै: वैराग्य भावं मनसि प्रावर्धयम्। मदीयं

भवनं "अनाथशरणालयम्" कृत्वा, सर्वं स्वमपि मदार्जितं तदर्थं समर्प्य, तत्र तत्र दृश्यमानान् अनाथबालकान्, बालिकाश्च तत्र न्ययोजयम्। शरणालयाध्यक्षकृतेन महता प्रयत्नेन महतीं वृद्धि मवाप्य संप्रति मन्मनोरथं - पूरयन्निव गभीरो दृश्यते अयम्। तदा तदा देशस्थितानां धनिकानां गृहा-नवाप्य, तेभ्यो मदाशयं निवेद्य तद्दत्तं धनमपि तदभिवृध्यै व्ययी-करोमि। तत्वज्ञाः केचन मां मल्लक्ष्यं च श्लाघन्ते। अन्ये तु उन्मत्तः, कपटी, अधर्मेण धन-मार्जितवान् इति मां निन्दन्ति, धिक् कुर्वन्ति च, तदधिकृत्य न कापि चिन्ता मम। सत्यस्य धर्मस्य नीतेश्च कालेस्मिन् न कोप्यव-काशः। लोकानुभवेनैवैतदुच्यते। अधार्मिकः, वञ्चकश्च यः कोपि विद्येत एव। सर्वेपि तादृशा इति निश्चेतुं न कोपि शक्नोति। विद्याभिवृद्धिः सत्सङ्गः धर्मा-सक्तिः परोपकारचिन्ता इत्येतेषां सिद्धिः मल्लक्ष्यं तदर्थं यावज्जीवं प्रयतेयम्। अद्य ममावश्यकं न किमप्यस्ति। इदं शिथिल-गृहमेव वासस्य कृते पर्याप्तं भवति। यल्लभ्यते तद्भुज्यते। निर्मलान्तःकरणैरेभिः क्रीडामि, अभीप्सिताः कथाः कथयामि, कर्तव्यं बोधयामि, संप्रत्येव मत्प्रार्थिता मनश्शान्तिः प्राप्ता इति। एवमुक्त्वा तूष्णीं बभूव सः। तदीयं वृत्तान्तमशेषं श्रुत्वा एतादृशाः पुरुषाः लोके अतीव विरलाः इति चिन्तयन्नहं "परोपकाराय सतां हि सम्पदः" इतीदं महाकविवाक्यं स्मारं स्मारं तदनुमतः मद्रासस्थलं प्रत्यगाम्।

# सुभाषितानि

**श्री यन्. रामनाथार्यः**

[ पूर्वानुबन्धः ]

यस्याऽर्थाः तस्य मित्राणि, तस्याऽर्थाः तस्य बान्धवाः ।
यस्याऽर्थाः स पुमान् लोके, यस्याऽर्थाः स च पण्डितः ॥ ५६१

In this world a rich man is considered great; he is a learned man and friends and relations surround him.

त्यजन्ति मित्राणि धनैर्विहीनं पुत्राश्च दाराश्च सुहृज्जनाश्च ।
ते चार्थवन्तं पुनराश्रयन्ते अर्थो हि लोके पुरुषस्य बन्धुः ॥ ५६२

A person without riches is forsaken by friends, sons, wives and well-wishers; they flock to him it he regains wealth; wealth is the real friend and relation in this world.

शीलं कुलं नैव, न चैव विद्या
ज्ञानं गुणा नैव न बीजशुद्धिः ।
भाग्यानि पूर्वं तपसाऽर्जितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ५६३

One's fortune in this world is not due to his lineage, learning, knowledge or ther qualities; they are the result of one's meritorious deeds in past lives; they occur occasionally, as trees put forth flowers and fruits in proper seasons.

लाभप्रणयिनो नीचाः मानकामा मनस्विनः ।
मद्गुः सरसि मत्स्यार्थी हंसस्येष्टा प्रसन्नता ॥ ५६४

The lowminded act for gain; the high-minded for honour· The water fowl is fond of fish in the lake whereas the swan likes limpid waters.

ते वन्द्याः ते कृतिनः श्लाघ्या तेषां हि जन्मनोत्पत्तिः ।
यै रुज्झितात्मकार्यैः सुहृदामर्था हि साध्यन्ते ॥ ५६५

They are really deserving of respect, they are blessed and praiseworhty and of noble lineage, who, abandoning their own activities help their friends in accomplishing their work·

दोषमपि गुणवति जने दृष्ट्वा गुणरागिणो न खिद्यन्ते ।
प्रीत्यैव शशिनि पतितं पश्यन्ति लोकः कलङ्कमपि ॥ ५६६

Those who look at the merits of greatmen donot mind the blemishes in their character; people behold the moon with pleasure unmindful of the black spot in it·

पात्र मपात्रीकुरुते दहति गुणान् स्नेह माशु नाशयति ।
अमले मलं प्रयच्छति दीपज्वालेव खलमैत्री ॥ ५६७

The friendship with wicked persons is like the flame of a lamp. It spoils respectable persons (flame spoils the vessel); it undermines good qualities (destroys the wick)); destroys friendship (consumes oil); and it tarnishes the good reputation (deposits soot over clear things·)



## डाक्टर् वि. सुब्बय्य, (एल्. ऐ. एम्.)

**भारती वैद्यशाला, १०६, नवाब् हाकिम् वीथी,**

**कोयम्बत्तूरु.**

अयं महाशयः गैर्वाण्याः मासिकपत्रिकायाः अभिवृद्धये रू. ११६/– षोडशोत्तरशतरूप्यकाणि उदारतया व्यतरत् । तस्य प्रतिकृतिप्रकटनरूपेण कृतज्ञतां प्रकटयामः ।



# श्रीरामानुजाचार्यः

## “ अवरः ”

[ पूर्वानुबन्धः ]



यामुनाचार्यस्य अपरक्रियाः ब्रह्ममेधेन शिष्यैः निर्वर्तिताः। तदनन्तरं रामानुजः पुनः काञ्चीपुर मागत्य स्वामिसेवां कुर्वन्नासीत्।

एकदा रामानुजः निजभविष्यद्वृत्तान्त मधिकृत्य भगवतो वरदराजस्वामिनः उद्देशं ज्ञातुकामस्सन् आलये तिरुकच्चिनम्बि (काञ्चीपूर्णं) अभ्यर्थयामास। तस्य समाधानं भगवान् अर्चकमुखेन श्लोकरूपेणाऽदात्। तस्यार्थ स्त्वित्थम्भूतः — “अहमेव सर्वोत्कृष्ट - मङ्गलधामास्मि; द्वैतं मदभिमतम्। शरणागति रेव मोक्षोपाय स्समीचीनः। प्रपन्नस्य प्रयत्नावश्यकता नाऽस्ति। शरीरपातानन्तरं मोक्षो लभ्यते। इदानीं वर्तमानानां गुरूणां मध्ये पेरियनम्बि रेव (महापूर्णः) सर्वोत्तमः” इति।

तस्माद्रामानुजः विदितभगवदभिमतः काञ्चीपूर्णस्य सन्देश मनुसृत्य श्रीवैष्णवसिद्धान्तपरिज्ञानाय श्रीरङ्गे विराजमानं पेरियनम्बि मेव स्वाचार्यं समाश्रयितुं प्रस्थितः। परन्तु, मध्ये मार्गं मधुरान्तकक्षेत्र एव एतदर्थ मेव श्रीरङ्गात्प्रस्थितः पेरियनम्बि रभिमुखोऽभवद्रामानुजस्य। तत्रत्ये रामालय एव पेरियनम्बिः रामानुजस्य पञ्चसंस्करान् विधाय श्रीवैष्णवमतरहस्याण्युपदिदेश। एवं समाश्रयणानन्तरं द्वावपि गुरुशिष्यौ काञ्चीपुरं प्रतिनिवृत्तौ स्वामिकैङ्कर्यनिरतौ सुख मूषतुः।

**४. सन्यासाश्रमः**

रामानुजस्य कुटुम्बजीवनं न तावत् सुखप्रदमासीत् । तस्य गृहिणी भर्तुराध्यात्मिकविषयेषु न तावदानुकूल्यं प्रदर्शयति स्म । काले काले भर्तुरभिलाषस्य प्रतिकूलं प्रवर्तमानाऽऽसीत् । एकदा रामानुजः महाभागवतोत्तमं काञ्चीपूर्णं (तिरुक्कच्चिनम्बि) स्वगृहे सव्यञ्जनं सपरिकरं षड्रसोपेतं पञ्चभक्ष्य - परमन्नादिभि र्विशेषितं भगवन्निवेदितं प्रसादं भोजयित्वा तच्छेषं स्वीकर्तुकामः पत्नीं समादिशत् । प्रसादपरिग्रहाय प्रार्थितः काञ्चीपूर्णः यदा रामानुजस्य गृहमगात् तदा रामानुजः गृहेऽनुपस्थितः । तदा गृहिणी अवरवर्णानां भुक्तशेषः अग्रवर्णाना मनुपादेय इति मत्वा काञ्चीपूर्णं क्वचित्कोणे उपवेश्य पर्युषितान्नं परिवेषयामास । काञ्चीपूर्णोऽपि तदेव महाप्रसादं मन्यमानो भुक्त्वा भोजनपात्रं दूरतो निरस्य स्थलशुद्धिं कृत्वा स्वगृहं गतः ।

गृहमागतो रामानुजः पत्नी मपृच्छत् - तिरुक्कच्चिनम्बि रागतः किं? प्रसादस्वीकारः कृतः किं? इति । साऽपि प्रत्यवदत् — "कुतो नागमिष्यति प्रार्थितः? आयात एव महाभागः । अवरवर्णस्य तस्य भुक्तं शेषः ब्राह्मणाना मस्माकं अनुपादेय इति मन्यमानया मया तस्मै पर्युषितान्न मेव परिवेषितं; सोऽपि महता सन्तोषेण तदेव भुक्त्वा निर्गतः" इति ।

तच्छ्रुत्वा रामानुजोऽतीव कुपितः प्राह - पापीयसि । नाऽसि प्रेयसी मे । काञ्चीपूर्णः किल परमभागवतोत्तमः; तस्य भुक्तशेषेण वयं तरिष्याम, इति बुद्ध्या किल मया स प्रार्थितः प्रसादितश्च । भगवन्निवेदित - प्रसाद - परिवेषण मकृत्वा पर्युषितान्नं प्रदाय भागवतापचारं कृतवत्यसि ! भगवदपचारात् भागवतापचारो

महत् पाप खलु ! इतः परं यदि पुन स्त्वं ईदृशं पापं करिष्यसि तर्हि न मया सोढुं शक्यते' इति ।

अवाक् गृहिणी स्तब्धा न किमप्याह । किन्तु सा भर्तारं शिष्टाचर मतिक्रम्य प्रवर्तमान ममन्यत । गच्छति काले कदाचित् रामानुजस्य पत्न्याः पेरियनम्बि (महापूर्णः – रामानुजस्य आचार्यः) धर्मपत्न्याश्च स्त्रैणसुलभो वाक्कलह प्रवृत्तः । स्त्रीणां वाक्कलहः प्रायशः पतिपौरुषमपि स्पृशेत् । एवं च विदित वृत्तान्तः पेरियनम्बिः श्रेयोभिलाषी रामानुजस्य, ततः सकुटुम्बं प्रस्थितः श्रीरङ्गं प्रति । आचार्यनिर्गमनस्य कारणं परिज्ञाय रामानुजः अतीव खिन्नोऽभूत् अविधेयदारपुत्रै स्सह वासः कस्य वा न जनयेदुपतापम् ? सन्तप्तचित्तः रामानुजः अविधेयदार-परित्यागस्य अवकाश प्रतीक्षमाण एवासीत् । पूर्वमेव भार्यामूलकः भागवतापचारः आपतितः । इदानीं पुनः तत्तादृश एव ततोऽ-प्यधिक एव वा भार्यामूलकः आचार्यापचारः असह्यापचार स्समापतितः । प्रत्यहमाध्यात्मिकविकासं प्राप्तुकामस्य दारा आवर्त इव, परिग्रहः ग्राह एवेति भावं स्सुदृढ आसीत् । यदा श्वशुरः दुहितरं प्रेषयेति सन्दिदेश तदैव रामानुजः पत्नीं मातुर्गृहं सम्प्रेषयामास । तमेव चावकाशं भगवत्सङ्कल्पितं मन्यमानेन रामानुजेन सन्यासाश्रमः स्वीकृतः । प्रगाढं तदीयवैराग्यं विलोक्य जनास्तं "यतिराज" इत्याह्वयन्तः आसन् ।

"यो नित्यमच्युतपदाम्बुज युग्मरुक्म-
व्यामोहत स्तदितराणि तृणाय मेने ।
अस्मद्गुरो भगवतोऽस्य दयैकसिन्धो
रामानुजस्य चरणौ शरणं प्रपद्ये ॥"

इत्येवं यतिराजवैभव मनुभवद्भिः तदीयै शिष्यैः प्रशिष्यैश्च सादरं सभक्तिश्रद्धं नित्य मनुसन्धीयते ।

## ५. तिरुमन्त्रोपदेशः

श्रीरङ्गे यामुनाचार्य (आळवन्दार्) शिष्याः स्वाचार्यपीठं अधिष्ठातुं काञ्चीपुरात् (यतिराजं) रामानुज मानेतुं आळवन्दार् पुत्रं "तिरुवरंगप्पेरुमाळ् अरयर् नामानं प्रैषयन। रामानुजः गृहस्थाश्रम एव, पेरियनम्बि (महापूर्णं) समाश्रित्य पञ्चसंस्कार प्राप्तिपुरस्सरं श्री वैष्णवमतसिद्धान्तोपदेशं प्राप्नोत्। इदानीं आळवन्दार् शिष्येषु प्रमुखस्य तिरुक्कोट्टियूर् नम्बेः, (श्रीगोष्ठीपूर्णस्य) सकाशात् तिरुमन्त्रोपदेशं (मूलमन्त्रोपदेशं) प्राप्तुकामस्तमेवाचार्यमुपससाद। आचार्यः प्रथमतः रामानुजाय मूलमन्त्र मुपदेष्टुं नाङ्गीचकार। कतिपयकालपर्यन्तं रामनुजस्य भक्तिश्रद्धायोग्यताधिकं परीक्ष्यैव तिरुमन्त्रोपदेशः कर्तव्य इति आचार्यस्य आशयः। अतः स समागतं रामानुजं वारं वारं "श्वः" "परश्वः" इति ब्रुवन् मन्त्रोपदेश मकृत्वैव प्रेषयन्नासीत्। बहुवारप्रवृत्तावर्तनपरावर्तनैः रामानुजस्य हृदये यथा कथञ्चित् महत्कष्ट मनुभूयापि मन्त्रोपदेशः प्राप्तव्य इति सङ्कल्प स्सुदृढ आसीत्। अतो रामानुजः प्रत्यहं उदये कावेर्यां सुस्नातः धृतोर्ध्वपुण्ड्रः सन्ध्यादिकं समाप्य कावेरीतीर्थं प्राश्य तिरुक्कोट्टियूग्रामं (गोष्टीपुरं) गच्छन्नासीत्। एवं ऊनान्यूनं विंशति पर्यायाः प्रवृत्ताः। एकदा समागतं रामानुज आचार्यः पुनरन्यस्मिन् दिने समागन्तुमादिशत्। तदा प्रतिनिवर्तमानस्य रामानुजस्य ललाटतले विषादरेखाः स्पष्टं दृष्टाः। आचार्यस्य हृदयं द्रवीभूतम्। इतः परं परीक्षा न कर्तव्येत्यमन्यत।

[ अनुवर्तते ]

# Samskritha Bhasha Pracharini Sabha,

Upasangam (Branch) GUDUR.

## List of Life Members

| | |
|---|---|
| Chadalavada Venkateswarlu, Indian Oil Company, Opposite Rly Station, Gudur, Nellore Dt. | 25—00 |
| Tatiparthy Venkata Krishnaiah, Malavya Nagar. Gudur. | 25 – 00 |
| K. Atchyutha Venkatacharya, Gudur. | 25 – 00 |
| Md. Osman Saheb, Fruit Merchant, Hospital Road, Gudur. | 25—00 |
| S. V. Krishnaiah, Sardar Stores, Gudur. | 25 – 00 |
| P. Rajarama Reddy, Revathi Stores, Gudur | 25—00 |
| Kamisetty Subrahmanyam s/o Munikrishnaiah, Bazaar Street, Gudur | 25 - 00 |
| P. Ramachandra'ar, Timber Merchant, Gudur, | 25—00 |
| G. Dasaratharami Reddy, President Rotory Club. Gudur | 25 – 00 |
| B. Ramanatham, Swarna Mica Supplies, V. P. Koil Street Gudur | 25 – 00 |
| M. Ramakrishnaiah, Balaji Stores, Raja Street, Gudur. | 25— 00 |
| C. Radhakrishna Rao, No. 1/405, Malavya Nagar, Gudur. | 25 – 00 |
| S. Nagaraja Rao, Auditor, Malavya Nagar, Gudur. | 25 – 00 |
| Y. Rama Rao, Advocate, Malavya Nagar, Gudur. | 25 – 00 |
| Dr. Y. J. Prabhakara Reddy, Gudur. | 25—00 |
| G. Pullaiah, Dealer in Fertilizer, Raja St, Gudur | 25—00 |
| K L. Narasimha Rao, Head Master, Z. P. High School (Boys) Gudur | 25 - 00 |
| V. Sreenivasa Rao, Bazaar Street, Gudur. | 25—00 |

Please mention your membership Number for easy correspondence.

*R. N. 1845/60.* *Postal C. T. R. II.*
आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
Licensed to Post without Prepayment. LICENCE No. 57.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५-००

## प्रहेलिका



गोपालो नैव गोपाल स्त्रिशूली नैव शंकरः ।
चक्रपाणि स्स नो विष्णुः यो जानाति स पण्डितः ।।

(महोक्षः)

उच्छिष्टं शिवनिर्माल्यं वमनं शवकर्पटम् ।
काकविष्ठासमुत्पन्नः पञ्चैतेऽतिपवित्रकाः ।।

(दुग्धं गङ्गा मधु पट्टाम्बरं पिप्पलश्च)



Published by Sri N. Ramanatha Aiyer B. A; B. L., Advocate & Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri K. V. Raghavan, (in-charge) at Vijaya Press, Chittoor. (A. P.) C. 1500.